

॥ श्रीः ॥

# प्रसन्नकाश्यपम्

( अभिज्ञानशाकुन्तलस्योत्तरभागः )



जग्गू वकुलभूषणः

॥ श्रीः ॥

— शुभमस्तु —

# प्रसन्नकाश्यपम्

नाम

नाटकम्

श्रीयदुशैलवासिबालधन्वि
जग्गूवकुलभूषणकवि
विरचितम्

( अभिज्ञानशाकुन्तलस्योत्तरभागः )

शेषाद्रि प्रेस्, मैसूरु

॥ श्रीः ॥

# विज्ञप्तिः

हन्त, भोः, किमिति ब्रूमः,

क्व स महाकविः काळिदासः, क्व वा मनुष्यमात्राङ्कुरोयं जनः, "काव्येषुनाटकं रम्यं तत्रापि च शकुन्तला"। इति जगद्विख्यातेन शाकुन्तलेन यदयूयुजदयं स्वकृतिमिति, तदेतच्चामीकरारकूटयोस्तुलातोलनेन समीकरणकल्पं,इतीदं नाटकमनवलोक्यैव मा निन्दन्तु दोषज्ञाः, यत्तेनैव महाकविनोक्तं,–

"पुराणमित्येव न साधु सर्वं नचापि काव्यं नवमित्यवद्यम्।
सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिः ॥

इति,

तदेतत्संस्मृत्यैतदपि कटाक्षयन्तु सहृदयाः इत्यभ्यर्थये। तत्रभवतां सहृदयोत्तंसानां गुणैकपक्षपातिनामस्य नाटकस्योपोद्घातमनुगृहीतवतां निवृत्ताङ्गलकालेज संस्कृत प्रोफेसर एम्. हिरयण्णार्याणां, सन्निधौ कृतज्ञतापुरस्सरमनन्तान्धन्यवादान्समर्पयामि, किञ्च अस्य नाटकस्य मुद्रणार्थं द्रविणसाह्यं कृतवतां गुणैकपक्षपातिनां सहृदयानां वि. टि. तिरुनारायणार्याणां सन्निधौ सप्रमोदमनन्तान् धन्यवादान्समर्पयामि, इतिशम्

सहृदयानां विधेयः

जग्गू वकुलभूषणः

# Prasanna-Kasyapam

This is a play in three Acts, and it is intended to be a supplement to the *Sakuntalam*. Its theme, as indicated by the title, is the appeasement of *Kanva* by *Dusyanta* who, with his consort and young son, visits the sage in his hermitage. The characters here are the same as those in Kalidasa's play; and the reader is often reminded of that play by the beauty of the situations depicted as well as the delicacy of the sentiments expressed here. The style is simple and elegant; and the dialogue is vivacious throughout. The work is sure to interest all lovers of Sanskrit literature.

MYSORE,
8th September 1946

M. HIRIYANNA,
Retired Professor of Sanskrit,
Mysore University.

॥ श्री ॥

॥ शुभमस्तु ॥

श्रीमतेहयग्रीवायनमः

# प्रसन्नकाश्यपम्

## प्रथमोऽङ्कः

सन्तोष्य व्रजवासिनो निजगुणैः कालोचितै स्सादरं
वो द्रक्ष्यामि पुनस्समागत इति व्याहृत्य तान्दुःखितान्
यस्तस्मान्मधुरां गतो बहुतिथात्कालादुपेत्य व्रजं
तत्रत्यान्समनन्दयत्परिणतान्कृष्ण स्स पुष्णातु वः

( नान्द्यन्ते ततः प्रविशति सूत्रधारः )

सूत्रधारः —(सविनयं) एवमार्यमिश्रान्विज्ञापयामि,

नानानाटकनिर्माता यः कोविदमुदावहः ।
स एवास्यापि कर्ता हि जग्गूवकुलभूषणः ॥

अये, किन्नुखलु, मयि विज्ञापनैकताने शब्द इव श्रूयते, पश्यामि तावत् (परिक्रम्य) आं, ज्ञातं, —

सदार स्सकुमारश्च कण्वाश्रमदिदृक्षया ।
आयाति स्यन्दनेनासौ दुष्यन्तः कौतुकी वनम् ॥

( निष्क्रान्तः )

( स्थापना )

( ततः प्रविशति यथानिर्दिष्टो राजा )

राजा— प्रिये, सन्निहितं शचीतीर्थमुपस्पृश्य यास्यामः

शकुन्तला— मा गच्छदु अज्जउत्तो, अह्माणं सिणेहं विहड इस्सइ - छाया (मागच्छत्वार्यपुत्रः, अस्माकं स्नेहं विघटयिष्यति)

राजा— (सस्मितं) किमिदं, कातरेव, अप्रमत्तास्तावदधुना तीर्थमुपस्पृशामः, (रथादवरुह्य) किन्तु खलु, अद्यापि चिरयति माढव्यः

भरतः — अम्ब, सो पासाणसअळेहिं मक्कडउळं भीसअंतो दूळे वट्टइ, — छाया (अम्ब, स पाषाणशकलै र्मर्कटकुलं भीषयन्दूरे वर्तते)

राजा—(सस्मितं) सोपि बुध्या सजातीय एव,

(ततः प्रविशति वृद्धकञ्चुकिद्वितीयो रथेन विदूषकः)

विदूषकः— (रथादवरुह्य) वच्छ, भरद, एहि दाव, दंसणिज्जं दंसेमि, - छाया (वत्स भरत, एहि तावत् दर्शनीयं दर्शयामि)

भरतः— (रथादवरुह्य) किं तं दंसेहि, (उपसर्पति) छाया– ( किं तत् दर्शय)

विदूषकः— पेक्ख (चेलाञ्चलनिबद्धान्मण्डूकार्भकान्दर्शयति) छाया (पश्य)

भरतः— किं एदं एव्व मुञ्च मुञ्च –छाया (किमेतदेव मुञ्च मुञ्च)

राजा — वयस्य, शचीतीर्थमिदं उपस्पृशामः

(सर्वे शक्रावतारेणावतीर्य तीर्थमुपस्पृशन्ति)

शिशिर शीकर वीचि परम्परा —
परिहृतामित वर्त्मपरिश्रमाः ।
ननु कृता वयमम्बुजलोचने
कथमिदं समुपालभसे सरः ॥

शकुन्तला—इमिणा पुव्वं अङ्गुळीअअं ओहरिदं दाणिं अज्ज-उत्तस्स सण्णिहाणादो पडिस्समो ओहरिदो, छाया (अनेन पूर्व-मङ्गुलीयकमपहृतं इदानी मार्यपुत्रस्य सन्निधानात्परिश्रमो पहृतः)

विदूषकः— जं किं चि ओहरणव्वग्गेण णेण चोळेण होदव्वं छाया (यत्किंचिदपहरणव्यग्रेणानेन चोरेण भवितव्यं)

भरतः— (सहस्ततालं) ही, ही, एत्थ, कहं आहिण्डइ मच्छ-समूहो एक्कं गेह्ण —छाया (ही ही अत्र कथमाहिण्डते मत्स्य समूहः एकं गृहाण)

विदूषकः—मा खु, मा खु, गिळइ महवि अङ्गुलीअअं —छाया (मा खलु, मा खलु, गिलति ममाप्यङ्गुलीयकं) (सर्वे रथमधिरोहन्ति)

विदूषकः— एहि वच्छ, मह रहं, अण्णं दंसेमि — छाया (एहि वत्स मम रथं अन्यद्दर्शयामि)

भरतः— पेक्ख, अम्ब, अज्जो आआरेइ — छाया (पश्यास्ब, आर्य आकारयति)

शकुन्तला— गच्छ, तस्स रहेण आआहि —छाया (गच्छ, तस्य रथेन आयाहि)

भरतः— तुमं तुरिअं रहेण पुळदो गमिस्ससि, ता तस्स रहं

ण गमिस्सं – छाया (त्वं त्वरितं रथेन पुरतो गमिष्यसि, तस्मात्तस्य रथं न गमिष्यामि)

शकुन्तला— ता एहि, (स्वाङ्कमारोपयति) छाया (तर्हि एहि) (सूतः वाहान्प्रेरयति)

राजा— प्रिये, तदा तावत्सारङ्गे शरप्रयोगैकतानतया न मया सम्यगवलोकितो ऽयं वनोद्देशः, सारथे, मन्दं प्रयातु स्यन्दनः (सूतः तथा करोति)

शकुन्तला— तदा अण्णमाणसाए मए वि ण दिट्ठो एसो छाया (तदा अन्यमानसया मयापि न दृष्ट एषः)

राजा— अहो, अकृत्रिमवनोद्देशरामणीयकं,

लता यथेच्छं परिरभ्य शाखिनः
परस्पराश्लिष्टविलम्बिशाखिकाः ।
लतागृहत्वं स्वयमेत्य बिभ्रति
श्रियं गृहारामलतागृहाधिकाम् ॥

शकुन्तला— जाद, पेक्ख, एत्थ पक्खिणिअरो कळरवं विहरन्तो आहिण्डइ –छाया (जात, पश्य, अत्र पक्षिनिकरः कलरवं विहरन्नाहिण्डते)

राजा— साधु दर्शितं —

तरुविटपतटेषु पक्षिणो ऽमी
कलमधुरस्वरदर्शितात्मतोषाः ।
भवनकनकपञ्जरेषु पुष्टात्
ननु रुचिरा विचरन्ति पत्रिणो ऽपि ॥

शकुन्तला— अदो एव्व मह अहिळासो वणवासम्मि – छाया (अत एव ममाभिलाषो वनवासे)

सूतः— पश्यत्वायुष्मान्

वाजिनः प्रजविनो गतिमान्द्यात्
लज्जिता इव विनामितशीर्षाः ।
फूत्कृतिप्रकटितामितरोषाः
प्रग्रहान्कटकटेति दशन्ति ॥

राजा— विमुक्तप्रग्रहो भव (सूतः तथा करोति)

राजा— प्रिये,

महीभृत्कान्ताङ्गः फलकुसुमपूर्णो द्विजगणैः
समन्तादुद्घुष्टश्रुतिसुभगनादैः परिवृतः ।
विधातुं सत्कारं तरुपरिजनः कुम्भिकलितः
सुदूरादभ्येति प्रकटितजवो नः खलु पुरः ॥

शकुन्तला— जाद, अह्माणं मज्झे णिसण्णो होहि (तथाकारयति) छाया (जात, आवयो र्मध्ये निषण्णो भव)

राजा— किमिदं,

शकुन्तला— (सलज्जं) अण्णस्स पुळदो वि अज्जउत्तस्स किं पासवट्टिणी हविस्सं — छाया (अन्यस्य पुरतो पि आर्यपुत्रस्य किं पार्श्ववर्तिनी भविष्यामि)

राजा— मुग्धे, नन्वभ्येति पर्वत इत्युक्तं,

शकुन्तला— (सस्मितं) सिळिट्ठवअणेण विप्पळद्धा, – छाया (श्लिष्टवचनेन विप्रलब्धा)

विदूषकः— भरद, पेक्ख, हळिणजूहं — छाया (भरत, पश्य हरिणयूथं)

भरतः— कहिं, हं पेक्खामि (उत्तिष्ठति) — छाया (कुत्र, अहं पश्यामि)

राजा— (अङ्गुल्या निर्दिश्य)

शश्वद्विवल्य निजकण्ठमिमे कुरङ्गाः
भीत्यायतायतचलद्रथदत्तनेत्राः ॥
धावन्ति संप्लुतिवियद्गमनाः प्रियाभिः
हुङ्कारहूतनिजपोतकृतादराभिः ॥

(भरतः— सचलितताल पश्यति)

राजा— काश्यपाश्रम स्सन्निहित इव
नैसर्गिकं वैरमपास्य जन्तवः ।
परस्परस्नेहपरा विहारिणः
तन्वन्ति पौरात्मसु विस्मयं तपः—
प्रभाव एवं ह्यनिलोकवैभवः ॥

शकुन्तला— (सानन्दं) आम, सण्णिहिदो एव्व — छाया (आम सन्निहित एव)

राजा— (सवैलक्ष्यं) किन्नु खलु, शान्तेऽप्याश्रमपदे परिस्फुरति मे दक्षिणमक्षि

शकुन्तला— जइ एव्वं, मह वि दक्खिणं अक्खि पडिप्फुरिदकप्पं एव्व — छाया (यद्येवं ममापि दक्षिणमक्षि परिस्फुरितकल्पमेव)

राजा— कथमिव

शकुन्तला— जदो अस्समप्पदेसे अण्णा सवत्ती आअमस्सइ छाया (यत आश्रमप्रदेशे अन्या सपत्नी आगमिष्यति)

राजा— (समन्दस्मितं) यावदपि सम्पादयसि ?

शकुन्तला— संति खु संपादेदुं अणसूआप्पिअंवदा — छाया (स्तः खलु सम्पादयितुमनसूयाप्रियंवदे)

विदूषकः— वअस्स, परिचिदो विअ एसो देसो — छाय (वयस्य परिचित इव एष देशः)

राजा— अथकिं, अयमाश्रमपर्यन्तप्रदेशः

सान्द्रप्ररूढवृक्षो विकीर्णभोग्यप्रसूननिकरश्च ।
स्वयमाश्रमोपकण्ठो वितनोत्यातिथ्यमतिथिसङ्घाय ॥

शकुन्तला— (सानुनयं) अज्ज उत्त, हं एआइणी अस्समं प्पविसिअ अदक्किआअमणेण संतोसइस्सं सहीजणं — छाया (आर्यपुत्र, अहमेकाकिनी आश्रमं प्रविश्यातर्किंतागमनेन सन्तोषयिष्यामि सखीजनं)

राजा— भवत्येव प्रथममनुभवतु स्निग्धजनप्रथमदर्शनानन्दं वयं तु तपोवनोद्देशविलोकनेन विनोदितमानसा यावदनन्तरं प्रविशामः, सारथे, रथ्यान्विगतश्रमान्कुरु, एते हि —

खरकिरणखरातपातितप्ता
श्रमजलमुग्धनिसर्गगात्रवर्णाः ।
मुखगलदवदातफेनपिण्डाः
द्रुतपृथुलोच्छ्वसनै वदन्ति खेदम् ॥

(सर्वे— रथादवतरन्ति) (सूतः— रथेन निष्क्रान्तः)

राजा— पारिभद्र, फलकुसुमभाजनमादाय देवीमनुव्रज, वयस्य, कथं भवान् ?

विदूषकः— ( स्वशिरः परामृशन् ) सण्णिहिदा मज्झह्लवेळा भोअण, णहि, णहि, भाणुवंदणं कादव्वं — छाया (सन्निहिता- मध्याह्नवेला, भोजन नहि, नहि भानुवंदनं कर्तव्यं)

राजा— (सस्मितं) मास्तु कथाविस्तरः,

विदूषकः— कहिं गंतुकामो तुमं – छाया (कुत्र गंतुकामस्त्वं)

राजा— उक्तं हि,

विदूषकः— गच्छदु भवं हं देविं अणुगच्छामि — छाया (गच्छतु भवान् अहं देवीमनुगच्छामि)

राजा— यथारोचते भवते (परिक्रामति)

विदूषकः— जिट्ठ चिट्ठ महाबह्मणोहं अणुरूवेण संमाणेण प्पवेसणिज्जो, ता तुए एव्व अणंदरं अस्समं प्पविस्सइस्सं, — छाया (तिष्ट, तिष्ट महाब्राह्मणोऽहं, वनुरूपेण सम्मानेन प्रवेशनीयः तस्मात्त्वयैवानन्तरमाश्रमं प्रवेक्ष्यामि)

राजा— तथा (माढव्येन निष्क्रान्तः)

कञ्चुकी— ( भरतमादाय फलकुसुमपाणिः ) इत इतो देवी, इद- माश्रमपदं

शकुन्तला— (सविस्मयं) चिळादो दिट्ठो अस्समो अण्णो विअ (परितो विलोक्य) किण्णु सु ण कोवि — छाया (चिरादृष्ट आश्रमो ऽन्य इव, किन्तुखलु न कोपि)

कञ्चुकी— पश्यतु देवी, पर्णशालाजिरे कोपि बालकः हरिण- पोतेन क्रीडन्नास्ते

शकुन्तला— (सानन्दं) कस्स एसो, (परिक्रामति) — छाया (कस्यैषः)

(ततः प्रविशति यथानिर्दिष्टो बालकः)

बालकः— गिह्रीदो सि, दाणिं किं करेसि, (परिस्फुरन्तं हरिणपोतकं कण्ठे गृहीत्वा) एत्थ णहि तुह अज्जू, दाणिं किं करेसि, (बलात्तन्मुखं गृहीत्वा चुम्बति) छाया — (गृहीतोसि, इदानीं किं करोषि, अत्र न हि तवाम्बा, इदानीं किं करोषि)

शकुन्तला— (उपसृत्य) जाद, को तुमं — छाथा (जात, कस्त्वं)

बालकः— मह अंबाए पुत्तओ, — छाया (ममाम्बायाः पुत्रकः)

शकुन्तला— (समन्दस्मितं) तुह अंबाए णामहेअं किं - छाया (तवाम्बाया नामधेयं किं)

बालकः— मह अंबात्ति, — छाया (ममाम्बेति)

(शकुन्तला - बालकमादाय परिचुम्बति)

(भरतः— अवतीर्य हरिणपोतं गृह्णाति)

बालकः— हुं मह हळिणपोदओ, (वेष्टमानो बलादवस्रंसनेनावतीर्य तिष्ठति) — छाया (हुं मम हरिणपोतकः)

कञ्चुकी — अहो बालस्योक्तिर्निसर्गरमणीया, एवं किल सर्वत्र

भरतः— (बालकमुपसृत्य) अह्माणं दोह्णं वि एसो — छाया (आवयो र्द्वयोरप्येषः)

बालकः— को तुमं — छाया (कस्त्वं)

भरतः— सउंदळाए पुत्तओ — छाया (शकुन्तलायाः पुत्रकः)

बालकः— का सउंदळा — (का शकुन्तला)

भरतः— (सहासं) अह्मो, तुमं ण जाणासि सउंदळं ? पेक्ख, (अङ्गुल्या दर्शयति) छाया –(अहो त्वं न जानासि शकुन्तलां ? पश्य)

बालकः— (शकुन्तलां विलोक्य) किं तुमं एव्व सउंदळा –छाया (किं त्वमेव शकुन्तला)

कञ्चुकी – रमणीय स्सल्लापः

शकुन्तला— (सस्मितं) हं तुह अंवा — (अहं तवाम्बा)

बालकः— णहि तुमं मह अंवा (भरतमुपसृत्य) देहि पोदअं — छाया (नहि त्वं ममाम्बा, देहि पोतकं)

भरतः (सधात्र्यं) पेक्ख अंव, — छाया (पश्याम्ब)

शकुन्तला— जाद दावेमि, कहेहि कहिं तुह अंवा — छाया (जात, दापयामि, कथय, कुत्र तवाम्बा)

बालकः— माळिणिं गदा, (सदैन्यं) दावेहि, – छाया (मालिनीं गता, दापय)

शकुन्तला— जाद भरद, देहि तस्स, — छाया (जात भरत, देहि तस्मै)

भरतः— (सशिरश्चालनं) ण खु हं देमि — छाया (नखल्वहं ददामि)

बालक— (भरतमनुसृत्य) मह अंवा फळं आणीअ देदि, तुह वि देमि, णं देहि –छाया (ममाम्बा फलमानीय ददाति तेपि ददामि एनंदेहि)

शकुन्तला— (सप्रेम) हं एव्व तुह फळं देमि (कञ्चुकिहस्तादेकं फलमादाय ददाति) — छाया (अहमेव ते फलं ददामि)

बालकः— मह हळिणपोदअस्स अद्धं विभजेहि, (निर्यातयितु मिच्छति) — छाया (मम हरिणपोतकायार्धं विभज)

शकुन्तला— (सवैलक्ष्यं) तस्स अण्णं देमि, एदं तुमं खज्जेहि, छाया (तस्यान्यद्ददामि एतत्त्वं खाद)

भरतः— कीळह्म, आआहि, (बालकमाकर्षति) — छाया (क्रीडावः, अयाहि)

बालकः— (नेपथ्याभिमुखमवलोक्य) हं, मह अंबा तित्थं गेह्णिअ आअच्छइ — छाया (हू, ममाम्बा तीर्थं गृहीत्वाऽऽगच्छति)

शकुन्तला— (नेपथ्याभिमुखमवलोक्य) का एसा, छाआए अणसूआ विअ, — छाया (कैषा छायया अनसूयेव)

बालकः— अणसूआ णहि, मह अंबा, — छाया (अनुसूया नहि ममाम्बा)

(ततः प्रविशति वामकटिसमारोपिततीर्थकलशा अनसूया)

अनसूया (शकुन्तलां विलोक्य सवैलक्ष्यं) किण्णु खु (स्तम्भीभूय तिष्ठति) — छाया (किन्नु खलु)

शकुन्तला— (सगम्भीरमन्दस्मितं) हं — छाया (अहं)

अनसूया— (बाष्पाविलमक्षि विस्तार्य) हळा प्पिअंवदे, प्पिअंवदे, कहिं सि, — छाया (हला, प्रियंवदे, प्रियंवदे कुत्रासि)

शकुन्तला— कहिं सा, — छाया (कुत्र सा)

अनसूया— कहं सउंदळा विअ, (ससम्भ्रमं निष्क्रान्ता)— छाया (कथं शकुन्तलेव)

बालकः— (सदैन्यं) अंब, मह हळिणपोदअं एसो गिह्णादि, (निष्क्रान्तः) — छाया (अम्ब, मम हरिणपोतकमेष गृह्णाति)

शकुन्तला— अच्चरिअं, पेम्मं णाम किंवा ण करेइ — छाया (आश्चर्य, प्रेम नाम किं वा न करोति) (नेपथ्ये) कहिं अवि णाम सच्चं, — छाया (कुत्र, अपि नाम सत्यं)

(ततः प्रविशत्यनसूया प्रियंवदया सह)

अनसूया— किं असच्चं कहेमि (उपसर्पति) — छाया (किमसत्यं कथयामि)

(प्रियंवदा— विलोक्य विवर्णवदना निर्निमेषा तिष्ठति)

शकुन्तला— (सगद्गदं) किण्णु खु, का एसा — छाया (किन्तु-खलु कैषा)

प्रियंवदा— (सबाष्पं) मंदभाइणी हं एव्वं पुच्छिदव्वा संउत्ता, (शकुन्तलायाः कण्ठमाश्लिष्य तदंसदेशे मुखं निवेश्य बाष्पमुत्सृजति) — छाया (मन्दभागिन्यहमेवं प्रष्टव्या संवृत्ता)

शकुन्तला— हळा अणसूए, एहि दाव, तुमं वि, कंठग्गहेण मं आणंदेहि, (अनसूयामालिंग्य चेलाञ्चलेन प्रियंवदाया बाष्पं प्रमार्ष्टि) — छाया (हला अनसूये, एहि तावत्, त्वमपि कण्ठग्रहेण मामानन्दय)

अनसूया— (साक्षररिंखणं) किं वि भणिदुं वि ण प्पसरइ जीहा — छाया (किमपि भणितुमपि न प्रसरति जिह्वा)

शकुन्तला— (प्रियंवदायाश्शिरः परामृशन्ती) एव्वं णाम पेम्म-कज्जं, — छाया (एवं नाम प्रेमकार्यं)

(बालकः— ससम्भ्रमं प्रविश्यानसूयाया वल्कलाञ्चलं गृह्णाति)

शकुन्तला— अणसूए, कस्स एसो, आणदग्गंधी, इमस्स पिदुणो णामहेअं किं — छाया (अनुसूये, कस्यैष आनन्दग्रन्थिः, अस्यपितुर्नामधेयं किं) (अनसूया— सलज्जं शिरोनमयति)

शकुन्तला— ( प्रियंवदाया मुखमुन्नमय्य ) पिअं मे, पिअं मे, दिट्ठिआ गुव्विणी संउत्ता सि, अणसूए, प्पिअंवदाए वल्लहो को – छाया (प्रियं मे प्रियं मे, दिष्टया गुर्विणी संवृत्ता सि, अनुसूये, प्रियंवदाया वल्लभः कः)

अनसूया— (समन्दस्मितं) सारद्दतो, — (शारद्वतः)

शकुन्तला—(सस्मितं) तुह वल्लहो किं संगरवो –छाया (तव वल्लभः किं शार्ङ्गरवः)

(अनसूया— सस्मितमवनमितशीर्षा वल्कलाञ्चलाद्बालकं मोचयति)

प्रियंवदा— (निर्वर्ण्य) राअउळसरिसेण गंभीळत्तणेण अण्णारिसी संउत्ता सउंदळा, ताए व्वाहरिदुं वि ळज्जा वाहेइ –छाया (राजकुलसदृशेन गाम्भीर्येणान्यादृशीसंवृत्ता शकुन्तला, तया व्याहर्तुमपि लज्जा बाधते)

शकुन्तला—तुमं वि गुव्विणी लावण्णमई रूपेण अदिक्कंतरइसुंदेरा संउत्ता सि, ता तुए व्वाहरिदुं हं वि जिहिरेमि —छाया ( त्वमपि गुर्विणी लावण्यमयी रूपेणातिक्रान्तरतिसौन्दर्या संवृत्ता सि, तस्मात् त्वया व्याहर्तुमहमपि जिह्रेमि)

प्रियंवदा— (समन्दस्मितं) किं एदं, अणिवेइआअमणं – छाया (किमेतत्, अनिवेदितागमनं)

शकुन्तला— चिळदिट्ठाणं तुह्माणं दंसणेण अप्पाणं सफळेदुं, — छाया (चिरदृष्टानां युष्माकं दर्शनेनात्मानं सफलयितु)

भरतः— ( अनसूयां प्रदर्श्य ) अम्ब, का एसा हेमऊडे आसि तावसी, सा विअ दीसइ, – छाया ( अम्ब, कैषा, हेमकूटे आसीत् तापसी, सेव दृश्यते)

शकुन्तला— एसा वि सा विअ, – छाया (एषापि सेव)

प्रियंवदा— अज्जस्स माळीचस्स च्छेतण गाळवेण पुव्वं भणिदं सुहप्पसूदपुत्तआ सउंदळा णिअवल्लहेण संगदा त्ति, अच्चरिअं, तइआ अंगुळीअअं वि तुह प्पडिऊळं संउत्तं, तदो पुणो वि कहं विअ तुह वल्लहेण समाअमो जादो, – छाया (आर्यस्य मारीचस्य छात्रेण गालवेन पूर्वं भणितं, 'सुखप्रसूतपुत्रका शकुन्तला निजवल्लभेन सङ्गतेति', आश्चर्यं, तदा अङ्गुलीयकमपि तव प्रतिकूलं संवृत्तं, ततः पुनरपि कथमिव तव वल्लभेन समागमो जातः)

शकुन्तला— (दीर्घं निश्वस्य) तत्थ भणिदव्वं वहु वट्टइ, अणंदरं सवित्थरं कहइस्सं, कहिं अह्माणं तादकस्सवो, अज्जगोदमी अ कहिं, – छाया (तत्र भणितव्यं बहु वर्तते, अनन्तरं सविस्तरं कथयिष्यामि, कुत्रास्माकं तातकाश्यपः, आर्यगौतमी च कुत्र)

प्रियंवदा— तादकस्सवो मज्झह्नकरणिज्जं कम्मं कादुं माळिणिं गदो, अज्जगोदमी उण प्पचळिदुं वि असमत्था अब्भंतरम्मि वट्टइ, – छाया (तातकाश्यपो मध्याह्नकरणीयं कर्म कर्तुं मालिनीं गतः आर्यगौतमी पुनः प्रचलितुमप्यसमर्था अभ्यन्तरे वर्तते)

शकुन्तला— ता अब्भदरं एव्व गदुअ ताए अज्जाए प्पणामं कळिस्सं, – छाया (तर्हि अभ्यन्तरमेव गत्वा तस्यै आर्यायै प्रणामं करिष्यामि)

(निष्क्रान्तास्सर्वे)

(प्रथमोऽङ्कः)



# अद्वितीयोऽङ्कः

( ततः प्रविशत्युपविष्टा गौतमी )

गौतमी— (सजृम्भं) प्पिअंवदे, प्पिअंवदे, कहिं सि, – छाया (प्रियंवदे, प्रियंवदे, कुत्रासि)

(सरभसं प्रविश्य) बालकः— (उपरि निपत्य) वुड्ढे, तुमं पेक्खिदुं कावि आअच्छइ — छाया (वृद्धे, त्वां प्रेक्षितुं काप्यागच्छति)

गौतमी— ( हुंकुर्वती ) जाद, मा पीडेहि, उट्ठेहि, — छाया (जात, मा पीडय, उत्तिष्ट)

बालकः— ( प्रसुप्तं हरिणार्भकमानीय ) पेक्खदु होदी (दर्शयति) — छाया (पश्यतु भवती)

गौतमी— ताद, कुदो तं पीडेसि विसज्जेहि अंबाए सआसं — छाया (तात कुतस्तं पीडयसि, विसृजाम्बाया स्सकाशं)

बालकः— हूं णाहं मुञ्चामि, (अंसमारोप्य नृत्यति) – छाया (हूं नाहं मुञ्चामि)

गौतमी— तुमं साळीणो णहि ( स्तोकमुच्चैः ) अणसूए, कहिं सि, णेहि दुट्ठं णं, – छाया (त्वं शालीनो नहि, अनसूये कुत्रासि नय दुष्टमेनं)

( ततः प्रविशति सह सखीभ्यां शकुन्तला )

शकुन्तला— (विलोक्य) अहो, एसा गोदमी

जिण्णा पिंडिअगत्ती पळिआउळमत्थआ दाणिं ।
दंतेहिं सुण्णमुही वळितिळअतळंगिअंगआ एसा ॥ १ ॥

– छाया ( अहो, एषा गौतमी, जीर्णा पिण्डितगात्री पलिताकुलमस्तके

दानीम् । दन्तैश्शून्यमुखी वलितिलकतरङ्गिताङ्गकैषा)

अनसूया— जदा तुमं उज्झिअ प्पडिणिउत्ता तदा प्पहुदि अचिळादो एव्व एव्वं संउत्ता – छाया ( यदा त्वामुज्झित्वा प्रतिनिवृत्ता, तदाप्रभृति अचिरादेवैवं संवृत्ता)

प्रियंवदा— तुह प्पच्चादेसं सुमरिअ, सुमरिअ, बाहाउळा आसि — छाया (तव प्रत्यादेशं स्मृत्वा स्मृत्वा बाष्पाकुलाऽऽसीत् )

शकुन्तला— (सबाष्पं) अणुकंपणिज्जा अज्जा, ताए मइ प्पेम्मं एव्वं, — छाया (अनुकम्पनीया आर्या, तस्या मयि प्रेमैवं)

प्रियंवदा— (सहसोपसृत्य उच्चैः) सउंदळा आअदा, — छाया (शकुन्तलाऽऽगता)

गौतमी— अंब, किं (कण्ठमुद्दस्य पश्यति) – छाया (अम्ब किं)

( प्रियंवदा– पुनरपि तदेव वदति )

गौतमी— (सहर्षं) कहिं, — छाया (कुत्र)

शकुन्तला— (उपसृत्य) सउंदळा हं वंदामि (प्रणमति) – छाया (शकुन्तलाहं वन्दामि)

गौतमी— (भ्रूदेशे पाणिं वलभीकृत्य निर्वर्ण्य) एहि जादे, (पार्श्वे समुपवेश्य) दिट्ठिआ चिळदिट्ठासि, ळाळणिज्जं तुमं एआइणिं तत्थ उज्झिअ क्कूरहिअआ हं आअदा, पुणो वि पेक्खिस्सं वा णवा त्ति — छाया ( एहि जाते, दिष्टया चिरदृष्टासि, लालनीयां त्वामेकाकिनीं तत्रोज्झित्वा क्रूरहृदयाहमागता पुनरपि द्रक्ष्यामि वा नवेति)

शकुन्तला— तुह्माणं अणुग्गहादो सव्वं सुहंतं सउत्तं – छाया (युष्माकमनुग्रहात्सर्वं सुखान्तं संवृत्तं)

गौतमी— होदु जादे, होदु, कहं वल्लहेण समाअमो - छाया (भवतु जाते, भवतु, कथं वल्लभेन समागमः)

शकुन्तला— राएसिणा प्पच्चादिट्ठा हं अच्चराए मेणआए हेमऊडं णीदा — छाया (राजर्षिणा प्रत्यादिष्टाहमप्सरसा मेनकया हेमकूटं नीता)

गौतमी— (सवैलक्ष्यं) दुहिदुवच्छलो खु इत्थिआजणो, तदो, — छाया (दुहितृवत्सलः खलु स्त्रीजनः ततः)

शकुन्तला— तत्थ तादकस्सवेण विअ अज्जमालीचेण पोसिदा, — छाया (तत्र तातकाश्यपेनेवार्यमारीचेन पोषिता)

गौतमी— लोए किं सव्वो वि दुस्संतसरिसो, — छाया (लोके किं सर्वोपि दुष्यन्तसदृशः)

शकुन्तला— किण्णु खु, सअं किदावराहे राएसिं उवालहसि — छाया (किन्नुखलु स्वयंकृतापराधे राजर्षिमुपालभसे)

गौतमी— (सस्मितं) होदु, होदु, दाणिं हं अण्णा संउत्ता खु — छाया (भवतु, भवतु, इदानीमहमन्या संवृत्ता खलु)

शकुन्तला— (सलज्जं) वुड्ढे, अलं पडिहासेणा, — छाया (वृद्धे, अलं परिहासेन)

गौतमी— एदं एव्व अहिलसइ दुहिदुबंधुजणो, तदो, छाया (एतदेवाभिलषति दुहितृबन्धुजनः ततः)

शकुन्तला— जुद्धसाहिअणिमित्तं सुरलोअं गदो अज्जउत्तो जअसीलो मज्झेमग्गं हेमऊडं आअदो — छाया (युद्धसाह्यनिमित्तं सुरलोकं गत आर्यपुत्रो जयशीलो मध्येमार्गं हेमकूटमागतः)

भरतः— (शार्दूलशिशुमादाय सरभसं प्रविश्य) मा एव्व देहि तं,

२

मह हत्थे पेक्ख, एदं ( सस्मितं दर्शयति ) — छाया ( मैव देहि तं मम हस्ते पश्यैतत् )

बालकः— अंब पेक्ख, एसो सद्दूळपोदअं गेह्णिअ आअदो — छाया (तम्ब, पश्य, एष शार्दूलपोतकं गृहीत्वाऽऽगतः)

शकुन्तला— ( सहसोत्थाय ) हंहो, मुंच मुंच, इमस्स मादा ळंघेइ, — छाया ( हंहो, मुञ्च मुञ्चास्य माता लंघते)

भरतः— ( सस्मितं ) इमस्स अंबाए भणिअ एव्व आणीदो एसो, — छाया (अस्याम्बाया भणित्वैवानीत एषः) (सर्वे — हसन्ति)

शकुन्तला— ( तस्य हस्ताच्छार्दूलंशिशुं विमोच्य ) तत्थ वि हेमऊडे एव्वं एव्व, अदो एव्व, इसिजणेण सव्वदमणोत्ति आहूदो, खणंवि तुह्णिं ण वट्टइ, (इति भरतमादायोपविशति) –छाया (तत्रापि हेमकूटे एवमेव, अतएव ऋषिजनेन सर्वदमन इति आहूतः, क्षणमपि तूष्णीं न वर्तते)

प्रियंवदा— एव्वं एव्व बाळाणं स्सहावो, अत्थि खु एसो, (इत्यनसूयायाः पुत्रमादाय चुम्बति) — छाया (एवमेव बालानां स्वभावः, अस्ति खल्वेषः)

गौतमी— (भरतमादाय स्वाङ्कमारोप्य शिरः परामृशन्ती) दुस्संतो एव्व आआरेण, कहं सहंति इमस्स विप्पओअं हेमऊडवासिणो — छाया(दुष्यन्त एवाकारेण, कथं सहन्तेऽस्य विप्रयोगं हेमकूटवासिनः)

शकुन्तला— तत्थ सव्वेहिं पत्थाणकाळम्मि बाहाउळळोअणेहिं विसज्जिदो एसो - छाया (तत्र सर्वैः प्रस्थानकाले बाष्पाकुललोचनैः विसर्जित एषः)

प्रियंवदा— को वा इच्छइ ईरिसस्स असण्णिहाणं — छाया (कोवा इच्छतीदृशस्यासन्निधानं)

गौतमी— (भरतस्य चुबुकमुन्नमय्य) जाद, तुह प्पासादो रम-णिज्जो अहवा तवोवणं ? — छाया (जात, तव प्रासादो रमणीयः अथवा तपोवनं ?)

भरतः— दाणिं एदं एव्व, — छाया (इदानीमेतदेव)

शकुन्तला— रज्जं णाम बंधणाआरं, अप्पावि अण्णस्स आअ-त्तो, — छाया (राज्यं नाम बन्धनागारं, आत्माप्यन्यस्यायत्तः)

अनसूया — रज्जं गदाए तुह एक्को हि वच्छरो आसि ? किण्णु खु एव्वं भणसि ? — छाया (राज्यं गतायास्तवैको हि वत्सर आसीत्, किन्तु खल्वेवं भणसि ?)

शकुन्तला— किं एक्को एव्व, मह उण बहुवच्छरो विअ, चिरं अस्समेसु ठिदाए, ( कञ्चुकिनमाहूय फलकुसुमभाजनमादाय ) समप्पेहि भअदो (इत्यनसूयाया हस्ते निक्षिपति) — छाया (किमेक एव, मम पुन बहुवत्सर इव चिरमाश्रमेषु स्थितायाः समर्पय भगवते)

प्रियंवदा— ( विलोक्य ) अह्महे, अमुळ्ळं पीदंबळं ( आदाय विस्तारयति) (पीताम्बराचित्रफलकः पतति)

प्रियंवदा— (सत्वरमादाय) किण्णु खु एदं, (निर्वर्ण्य सविस्मयं) सउंदळे, सा एव्व तुमं, तं एव्व अह्माणं उज्झाणं, सो एव्व णोमाळिआसंगदो सहआरो, सो एव्व भमरो, वअंपि दुवे, अच्चरिअं, तत्थ वट्टामो विअ - छाया (किन्तु खल्वेतत्, शकुन्तले, सैव त्वं, तदेवास्माकमुद्यानं, स एव नवमालिकासङ्गतस्सहकारः, स एव भ्रमरः, आवामपि द्वे, आश्चर्यं, तत्र वर्तामहे इव)   ..

अनसूया— (निर्वर्ण्य) किण्णु खु, अद्धळिहिदं विअ, अण्णं वि ळिहिदव्वं हवे, — छाया (किन्तुखलु, अर्धलिखितमिव, अन्यदपि लिखितव्यं भवेत्)

शकुन्तला— मए ण एव्व दिट्ठं, दंसेहि पेक्खह्म — छाया (मया नैव दृष्टं दर्शय, पश्यामः)

प्रियंवदा— किं एदं, तुए ण दिट्ठं (दर्शयति) — छाया (किमेतत्त्वया न दृष्टं)

शकुन्तला— (विलोक्य सस्मितं) चित्तअरेण कुसळेण होदव्वं, केण अहिळिहिदं हवे, — छाया (चित्रकरेण कुशलेन भवितव्यं, केनाभिलिखितं भवेत्)

प्रियंवदा— असडक्खीणं एदं उत्तंतं को अण्णो अहिळिहइ, — छाया (अषडक्षीणमेतं वृत्तान्तं कोऽन्योऽभिलिखति)

शकुन्तला— (स्मृतिमभिनीय) आं, सुमरिदं, मेणआणिजुत्ताए साणुमदीए भणिदं, सउंदळं चित्तगदं कदुअ राआ णिउक्कंठं विणोदेइ त्ति – छाया (आं, स्मृतं मेनकानियुक्तया सानुमत्या भणितं शकुन्तलां चित्रगतां कृत्वा राजा निजोत्कण्ठां विनोदयति, इति)

अनसूया— तंकाळिओ मुद्धहावो सुठ्ठु ळिहिदो — छाया (तत्कालिको मुग्धभावस्सुष्ठु लिखितः)

शकुन्तला— सा एव्व रमणिज्जा खु दसा — छाया (सैव रमणीया खलु दशा)

प्रियंवदा—किं पुणोवि आअच्छइ, –छाया (किं पुनरप्यागच्छति)

गौतमी— किं एदं — छाया (किमेतत्)

प्रियंवदा— सउंदळाए प्पडिकिदी (ददाति) – छाया (शकुन्तलायाः प्रतिकृतिः)

गौतमी— ( सुचिरं साधु निर्वर्ण्य ) जादे, दाणिं कहिं गदं तं कोदूहळं — छाया (जाते, इदानीं कुत्र गतं तत्कौतूहलं)

प्रियंवदा— (उच्चैः) वुड्ढे, कआ वि ण विसुमरणिज्जं त्ति राएसिणा चित्तम्मि ठाविदं, – छाया (वृद्धे, कदापि न विस्मरणीयमिति राजर्षिणा चित्रे स्थापितं)

गौतमी— (सहासं) सुट्ठु भणिदं — छाया (सुष्ठु भणित)

शकुन्तला— कहं विअ इमस्स आअमणं, — छाया ( कथमिवास्यागमनं)

भरतः— अंब, अज्जमाढव्वेण पीदंबळे णिक्खित्तं, मए दिट्ठं — छाया (अम्ब, आर्यमाढव्येन पीताम्बरे निक्षिप्तं, मया दृष्टं)

शकुन्तला— तह हवे, — छाया ( तथा भवेत् )

अनसूया— होदु एदं, सवत्तीजणो कहं, — छाया (भवत्वेतत् सपत्नीजनः कथं)

शकुन्तला— मं दिट्ठिं विअ पेक्खदि, — छाया ( मां दृष्टिमिव पश्यति )

अनसूया— (सवैलक्ष्यं) अविणाम सच्चं – छाया (अपि नाम सत्यं)

शकुन्तला— किं बहुणा, खणं वि मह अदंसणे सअं एव्व अण्णेसइ, कहिं सउंदळात्ति, — छाया ( किं बहुना, क्षणमपि ममादर्शने स्वयमेवान्विष्यति, कुत्र शकुन्तलेति)

प्रियंवदा— एव्वं होदुं तुह गुणो एव्व णिदाणं त्ति तक्केमि, – छाया (एवं भवितुं तव गुण एव निदानमिति तर्कयामि)

शकुन्तला— इदो प्पत्थाणकाळम्मि जह भणिदं तादकस्सवेण तह एव्व मए अणुट्ठिदं, — छाया (इतः प्रस्थानकाले यथा भणितं तातकाश्यपेन, तथैव मयानुष्ठितं)

अनसूया— अह्माणं प्पिअं एदं सुणिअ, —छाया (अस्माकं प्रियमेतच्छ्रुत्वा)

प्रियंवदा— तवोवणे किलसिदसरी ... दाणिं सुसुहं वट्टसि, — छाया (तपोवने क्लेशितशरीरा इदानीं सु... वर्तसे)

शकुन्तला— किं तं सुहं, — छाया (किं तत्सुखं)

प्रियंवदा— किण्णु खु एव्वं भणसि, रज्जे णिओअमेत्तेण सव्वं प्पचळइ, मत्तंडो कहं वट्टइ त्ति वि ण सुमरइ, एत्थ एव्वं होदि वा — छाया ( किन्नुकल्त्वेवं भणसि, राज्ये नियोगमात्रेण सर्वं प्रचलति, मार्तण्डः कथं वर्तते, इत्यपि न स्मरति अत्रैवं भवति वा)

शकुन्तला— एदं एव्व ळोअस्स वाळिसत्तणं, रण्णो वाहिअं विहवं पेक्खिअ एव्वं मंतेदि, अह्माणं णत्थि खु, तुह्माणं जारिसं भाअहेअं, — छाया (एतदेव लोकस्य बालिशत्वं, राज्ञो बाह्यं विभवं प्रेक्ष्यैवं मंत्रयते, अस्माकं नास्ति खलु युष्माकं यादृशं भागधेयं)

प्रियंवदा— (सस्मितं) अदो एव्व खु विसुमरिदो एसो रण्णजणो, अच्चरिअं, किण्णु खु एक्को वि ळेहो णहि, — छाया (अत एव खलु विस्मृत एषोऽरण्यजनः, आश्चर्यं, किन्नुखलु, एकोपि लेखो नहि)

शकुन्तला— एव्वं होदुं मह संकप्पो एव्व काळणं, — छाया (एवं भवितुं मम सङ्कल्प एव कारणं)

अनसूया— कीरिसो, — छाया (कीदृशः)

शकुन्तला— रज्जे जह जस्स कस्स वि हिअए खेदो ण हवे, तह पेक्खिदव्वं त्ति, — छाया (राज्ये यथा यस्य कस्यापि हृदये खेदो न भवेत् तथा प्रेक्षितव्यमिति)

अनसूया— तादकस्सवेण वि भणिदं, ळेहस्स अणाअमणे ळाअकज्जभरो एव्व काळणं हवेत्ति, — छाया (तातकाश्यपेनापि भणितं, लेखस्यानागमने राजकार्यभर एव कारणं भवेदिति)

प्रियंवदा— कुदो अणिवेदिअ आअदा, – छाया (कुतोऽनिवेद्यागता)

शकुन्तला— हरिसभरं अणुहोदुं, छाया (हर्षभरमनुभवितुं)

प्रियंवदा— तं सच्चं, – छाया (तत्सत्यं)

शकुन्तला— अण्णंअ, तुह्माणं दंसणकए पुणो पुणो प्पत्थिदेण अज्जउत्तेण ण समओ णिद्दिट्ठो, किदावराहो विअ अज्जकस्सवस्स मुहं दंसिदुं वि ण पारेमि त्ति, – छाया (अन्यच्च, युष्माकं दर्शनकृते पुनः पुनः प्रार्थितेनार्यपुत्रेण न समयो निर्दिष्टः, कृतापराध इवार्यकाश्यपस्य मुखं दर्शयितुमपि न पारयामीति)

गौतमी— (सस्मितं) दाणिं, – छाया (इदानीं)

शकुन्तला— मए कहिदो तादकस्सवस्स गुणो, — छाया (मयाकथितस्तातकाश्यपस्य गुणः)

(ततः प्रविशत्यार्द्रशिख श्शार्ङ्गरवः)

शार्ङ्गरवः— (विलोक्य सहर्षं) किन्नुखलु, सुरसरितो मर्त्यलोकावतरणं, (गौतमीव्रजं सर्वा उत्तिष्ठन्ति)

शकुन्तला— (सलज्जं) जेट्ठभादुणो हं वंदामि (प्रणमति) – छाया (जेष्ठभ्रात्रे, अहं वन्दे)

शाङ्गंरवः— सर्वथा भर्तुरभिमता भव,

शकुन्तला—कहिं तादकस्सवो, — छाया (कुत्र तातकाश्यपः)

शाङ्गंरवः— अग्निशरणं प्रविष्टः

अनसूया— हं कहइस्सं, सउंदळा आअदा त्ति, — छाया (अहं कथयिष्यामि शकुन्तलाऽऽगतेति)

प्रियंवदा— पुढमं हं एव्व कहइस्सं, (इति भरतमाददाति)-छाया (प्रथममहमेव कथयिष्यामि) (उभे अप्यहमहमिकया निष्क्रान्ते)

शकुन्तला-(गौतमीमुपसृत्य उच्चैः) तादकस्सवो आअदो, गच्छह्म — छाया (तातकाश्यप आगतः, गच्छामः)

गौतमी— जादे गच्छ तुमं, हं मंदं आअच्छामि, — छाया (जाते, गच्छ त्वं, अहं मन्दमागच्छामि)

शकुन्तला— तह, – छाया (तथा) (शाङ्गंरवप्रदर्श्यमानमार्गा कञ्चुकिना सह निष्क्रान्ता)

(गौतमी— दण्डमवलंब्योत्थाय मन्दं निष्क्रान्ता)

( इति द्वितीयोऽङ्कः )

# अथ तृतीयोऽङ्कः

(ततः प्रविशति विदूषकद्वितीयो राजा)

राजा— (समन्तादवलोक्य) अहो प्रकृतेः परिणामशीलता,

वृक्षका ये पुरा तेऽद्य प्रांशवः पीवरोच्छ्रिखाः ।
ये च जीर्णाः पुरा तेऽद्य स्थाणवः कोटराकुलाः ॥ १ ॥

विदूषकः— किं सो एसो रिक्खखंडो, जो पुव्वं ओणदमुहेण मए दिट्ठो, (मुखमुद्यम्य पश्यति) — छाया (किं स एषः वृक्षषण्डः यः पूर्वमवनतमुखेन मया दृष्टः)

राजा— अथकिं, वयस्य, पश्य तपस्विनां यथालाभसन्तुष्टतां

पर्णैः ससलिलैः कन्दैः प्रवर्तयन्त शरीरदिनयात्राम् ।
तरुतलशाद्वलवसतिं बहुमन्यन्ते तपस्विन स्तुष्टाः ॥ २ ॥

विदूषकः— अळाहे हंवि एव्वं एव्व, – छाया (अलाभेऽहमप्येवमेव)

राजा— हुं अनभिज्ञोऽसि, तपस्विनां किंवा दुर्लभं, (सनिर्वेदं) धिगेनं नियंत्रणशीलं राज्याधिकारं, —

अन्यापेक्षा स्वीयकार्यै यथेच्छं
भोक्तुं वक्तुं गन्तुमप्यन्तरायः ।
क्लेशावासो हन्त राज्याधिकारः
नित्यं बन्ध श्शृङ्खलामन्तरेण ॥ ३ ॥

विदूषकः— अळं णिव्वेदेण, एदे वि तवोणिअळेण णिअळिदा, — छाया (अलं निर्वेदेन, एतेपि तपोनिगडेन निगडिताः)

राजा— मैवं, धन्याः खल्वेते —

वशाङ्कुशवशीकृतप्रबलमत्तचित्तद्विपाः
नियन्त्रितचलाचलप्रथितसर्वबाह्येन्द्रियाः ।
समीकृतसुखासुखा मुनिवराः परब्रह्मणो
गुणानुभवमोदिताः प्रतिवसन्ति यस्मादिह ॥ ४ ॥

(सस्मितं) यदभिदधति प्राज्ञाः "कामिनीजिज्ञासा कार्यसामान्यं प्रति प्रतिबन्धिके" ति तत्तथ्यमेव, यत्पुरा कृतसान्निध्यस्य मे

शकुन्तलाजिज्ञासा तावदीदृशदर्शनानन्दविघटिका संवृत्ता, (नेपथ्ये) इदो इदो देवी, — छाया (इत इतो देवी)

विदूषकः— (आकर्ण्य) का गई, पुणो वि अण्णा आअदा विअ, वअस्स गेह्ण पाहेअं, — छाया ( का गतिःपुनरपि अन्याऽऽगतेव, वयस्य, गृहाण पाथेयं )

राजा-(सस्मितं) अलं शङ्कया, यद्यपि शब्दोऽयं पुरावृत्तं संविधानमेव स्मारयति, तथाप्यत्र वारयति देवीशब्दस्तादृशीं शङ्कां

विदूषकः— को जाणादि कावि देवी णिअकण्णिअं तुह देदुं आअदा हवे — छाया ( को जानाति, कापि देवी निजकन्यकां तुभ्यं दातुं आगता भवेत् )

राजा— ( विलोक्य ) मूर्ख, शकुन्तलैषा सह सखीभ्यामित एवाभिवर्तते तद्वृक्षान्तरिता स्तावत्पश्यामः कान्ताया विहारं (तथा करोति)

( ततः प्रविशति सह सखीभ्यां शकुन्तला )

शकुन्तला— कहिं सो केसररुक्खओ, – छाया (कुत्र स केसरवृक्षकः)

अनसूया— णं पुळदो एव्व राअइ, –छाया (ननु पुरत एव राजते)

राजा— (विलोक्य) —

सेयं विगलितमौग्ध्या सर्वालङ्कारभूषितावयवा ।
अन्येव भाति कान्ता स एव देशः पुरानुभूतो यः ॥ ५ ॥

शकुन्तला— ( सविस्मयं ) जो तदा बाळो आसि, सो एव्व दाणिं प्पवड्ढो सोहइ, — छाया (यस्तदा बाल आसीत् स एवेदानीं प्रवृद्धश्शोभते)

राजा— अहो, अनसूयाप्रियंवदे अपि गृहिणीपदमधिरूढे एव

गाम्भीर्यं मुखपङ्कजे नयनयोश्चाञ्चल्यहीना गतिः
व्याहारे गतवक्रिमा च नितरां रीति स्स्पृहावर्जिता ।
औदास्यं सकलेषु वस्तुषु किमप्याविष्करोत्येतयोः
गार्हस्थ्यं किल यौवतस्य परमा सीमा स्पृहापूरणे ॥ ६ ॥

शकुन्तला— हळा प्पिअंवदे, मए वणजोसिणित्ति किदणामहेआ सहआरवहू णोमाळिआ एत्थ ण दीसइ, सोक्खु एसो सहआरो, जो पुव्वं जळसेअणेण अवच्चणिव्विसेसं वड्ढिदो मए किदणोमाळिआविवाहो अ, –छाया (हला प्रियंवदे, मया वनज्योत्स्नीति कृतनामधेया सहकारवधू नवमालिकाऽत्र न दृश्यते, स खल्वेष सहकारः, यः पूर्वं जलसेचनेनापत्यनिर्विशेषं वर्धितः मया कृतनवमालिकाविवाहश्च)

प्रियंवदा— सो एव्व एसो महन्तो संउत्तो, सा णोमाळिआ उण बहुवाळं पुप्फिदा जळाजिण्णा धळणिदळम्मि णिवडिदा, एसो सहआरो उण अण्णाए ळदाए संगदो वट्टइ, – छाया (स एवैष महान्संवृत्तः सा नवमालिका पुनः बहुवारं पुष्पिता जराजीर्णा धरणितले निपतिता, एष सहकारः पुनः अन्यया लतया संगतो वर्तते)

शकुन्तला— (सबाष्पं) एव्वं एव्व हि ळोए पुरिसाणं स्सहावो — छाया (एवमेव हि लोके पुरुषाणां स्वभावः)

विदूषकः— (राजानं चालयित्वा) कहं भणिदं देवीए, — छाया (कथं भणितं देव्या)

राजा— (सस्मितं) सत्यमाह प्रिया, इदानीमेष सहकारः

भ्रमरझङ्कृतिमञ्जुसुमावलिः
तरुणपल्लवरागमनोहरः ।
नवलतापरिरम्भणगर्वितः
स्मरति नैव लतां नवमालिकाम् ॥ ७ ॥

शकुन्तला— (परिक्रम्य) किं एदं, सत्तवण्णवेदिआए अस्सत्थो आरोविदो, — छाया (किमेतत् सप्तपर्णवेदिकायां अश्वत्थआरोपितः)

अनसूया— तादकस्सवस्स णिओएण एसो रुक्खो ठाविदो, — छाया (तातकाश्यपस्य नियोगेनैष वृक्षस्स्थापितः)

राजा— साधु कृतं काश्यपेन, —

यस्मादश्वत्थवृक्षोयं प्रतीक्ष्यो दुरितापहः ।
प्रदक्षिणादिकार्याय तेन संरोपितस्ततः ॥ ८ ॥

शकुन्तला— ( अन्यतो विलोक्य ) अह्मो, रमणिज्जो खु एसो मअसद्धो, — छाया (अहो, रमणीयः खल्वेष मृगसार्थः)

प्रियंवदा— जा तुह प्पत्थाणकाळम्मि गुव्विणी आसि, ताए संददी एसो मअसद्धो, – छाया (या तव प्रस्थानकाले गुर्विण्यासीत् , तस्यास्सन्ततिरेष मृगसार्थः)

शकुन्तला— (सानन्दं) वड्ढदु णाम कहिं सा, — छाया (वर्धतां नाम कुत्र सा)

अनसूया— ( अङ्गुल्या निर्दिश्य ) पेक्ख दूळे रुक्खच्छाआए सुवइ, — छाया (पश्य दूरे वृक्षच्छायायां स्वपिति)

शकुन्तला— (विलोक्य) कहं वुड्ढा संउत्ता, — छाया (कथं वृद्धा संवृत्ता)

प्रियंवदा— हळा सउंदळे, पेक्ख को एसो, (तरुप्रच्छाये शयानं हरिणं प्रदर्श्य) अवि णाम सुमरसि, — छाया (पश्य क एषः अपिनाम स्मरसि)

शकुन्तला— ण सुमरामि, को एसो,- छाया (न स्मरामि क एषः)

प्रियंवदा— दीहापङ्गो, — छाया (दीर्घापाङ्गः)

शकुन्तला— (सवैलक्ष्यं) कहं दीहापङ्गो (उपसृत्य तन्मुखं चुम्बति) — छाया (कथं दीर्घापाङ्गः)

राजा— अहो, शरीरस्वभावः —

मसृणसूक्ष्मतनूरुहमञ्जुलः
तरलवीक्षणवल्गनकर्मभिः ।
हृदि मुदं व्यतनोन्मम यः पुरा
स परिणामवशादधुनेदृशः ॥ ९ ॥

ससम्भ्रमं प्रविश्य बालकः — अंब, मह हळिणपोदओ-जहिं कहिं वि धावन्तो गदो, तं गेह्णिअ देहि मह (इत्यनसूयाया वल्कलाञ्चलं गृह्णाति) — छाया (अम्ब, मम हरिणपोतकः यत्र कुत्रापि धावन्गतः, तं गृहीत्वा देहि मह्यं)

राजा— अहो, पुत्रवत्यपीयमनसूया,

विदूषकः— प्पिअंवदावि गुव्विणी, — छाया (प्रियंवदापि गुर्विणी)

राजा— अथकिं —

मन्दं चलत्यलसदृष्टिरियं कपोल —
लावण्यपूरविकलीकृतमौक्तिकाभा ।

आरण्यकानुगुणभूषणभूषितापि
गर्भात्तगौरतनुकान्तिमनोहरैव ॥ १० ॥

अनसूया— (बालकमादाय) सो गच्छदु णाम, अण्णं वण्णहळिणपोदअं देमि, — छाया (स गच्छतु नाम, अन्यं वर्णहरिणपोतकं ददामि)

बालकः— (सशिरश्चालनं) मा मह वण्णहळिणपोदओ, तं एव्व देहि, (रोदिति) – छाया (मा मह्यं वर्णहरिणपोतकः तमेव देहि)

चित्रपटहस्तो भरतः प्रविश्य— णं चित्तफळअं देमि, एत्थ आअच्छ, — छाया (एनं चित्रफलकं ददाम्यत्रागच्छ)

विदूषकः— अह्महे, चित्रफळओ इमस्स हत्थं कहं गदो — (अहो, चित्रफलकोऽस्य हस्तं कथं गतः)

राजा— (सविचिकित्सं) कथं, स चित्रफलकः, केनानीतः ?

विदूषकः— अण्णेण केण, — छाया (अन्येन केन)

राजा— किन्नुखल्विदं, एवं कृतं, मूर्ख, अनवसरज्ञोऽसि,

विदूषकः— को दोसो, सुट्ठु मए किदं, — छाया (को दोषः सुष्ठु मया कृतं)

राजा— इदमवलोक्य परिहसन्ति,

विदूषकः— तह णहि, णिद्दोसो राआत्ति मण्णंति, — छाया (तथा नहि, निर्दोषो राजेति मन्यन्ते)

(वृक्षान्तरान्मृगार्भकस्सवल्गितमनसूयामुपधावति)

अनसूया— पेक्ख, सो एव्व आअदो, गेह्ण तं एव्व, (बालकमवतारयति) — छाया (पश्य स एवागतः, गृहाण तमेव)

भरतः— हं गेह्नामि, (इति चित्रफलकं निपात्य सहसोपसर्पति) (हरिणार्भकः पुनरप्यपसरति) (विदूषकः— सहसोपसृत्य चित्रफलकमादत्ते)

राजा— (उपसर्पन्तं हरिणपोतकमादाय) हन्त —

मृदुलमुग्धतनु र्हरिणार्भकः
सभयकण्ठरवः कृतवल्गनः ।
करगतोऽयमितश्च्यवनाकुलः
स्फुरति विस्तृतलोलविलोचनः ॥ ११ ॥

(मन्दमुपसर्पति)

बालकः— अंब, केण वि सो ग्गहीदो, (अङ्गुल्या दर्शयति) — छाया (अम्ब, केनापि स गृहीतः)

(अनसूया प्रियंवदे— विलोक्य सलज्जं स्तोकमपसरतः)

राजा— (उपसृत्य) वत्स, मा रोदीः गृहाणैनं (ददाति)

बालकः— (सहासं) अंब, णेण दिण्णो (प्रदर्श्य) को एसो — छाया (अम्ब, अनेन दत्तः, क एषः)

अनसूया— (मन्दं) महाराओ, — छाया (महाराजः)

बालकः— कहं, महाराओ अह्माणं अस्समं आअदो, (इति राजानमेव पश्यति) — छाया (कथं, महाराजोऽस्माकमाश्रममागतः)

राजा— अहो, निर्व्याजप्रेमातिशयो बालस्य —

सादरं वीक्षमाणो मां निश्चलायतलोचनः ।
मृगे क्रीडास्पदे सक्तौ भुजौ शिथिलयत्यसौ ॥ १२ ॥

(नेपथ्ये) वेदघोषः

राजा— किन्नु खलु, तपोधनानामागमनमिव,

विदूषकः— जइ एव्वं महाबह्मणो सज्जो होमि, ताणं दंसण दाणस्स (इति सम्यक्कृतपरिधान स्सगम्भीरं तिष्ठति) – छाया (यद्येवं महाब्राह्मणो स्सज्जो भवामि तेषां दर्शनदानाय)

( राजा— सविनयं परिक्रामति )

( ततः प्रविशतः करगृहीतपूर्णकुम्भौ शार्ङ्गरवशारद्वतौ उदीर्यमाणमन्त्रै स्तापसै स्समं )

राजा— स्वागतं तपोधनानां ( प्रणमति )

सर्वे ( बाहुमुद्यम्य ) मङ्गलं भूयात्

( राजा— पूर्णकुम्भौ पाणिभ्यां स्पृष्ट्वा साञ्जलिबन्धं तिष्ठति ).

शार्ङ्गरवः— राजन्, इयमस्माकं भगिनी “ निस्तीर्णविप्रयोगार्णवां वत्सां वल्लभेन साकं द्रष्टुमिच्छामि ” इति कुलपतिना समादिष्टा भवदागमनं प्रतीक्षमाणा पूर्वपरिचितप्रदेशावलोकनेन तावदात्मानं विनोदयन्ती वर्तते,

राजा— कथं, मां प्रतीक्षते देवी, सज्जोहमात्मानं कृतार्थयितुं

विदूषकः— (आत्मगतं) किण्णु खु एक्को वि मं ण गणेइ (सनिर्वेदं भरतमादाय जनान्तिकं) पेक्ख कहं वट्टंति लंबकुच्चा एदे, — छाया (किन्नु खलु, एकोपि मां न गणयति, पश्य कथं वर्तन्ते लम्बकूर्चा एते)

भरतः— मा भणादु अज्जो एव्वं, — छाया (मा भणत्वार्य एवं)

राजा— अपि निर्वर्तितहवनकर्मा कुलपतिः

शार्ङ्गरवः— अवसितप्रायं, अग्निशरण एव भवन्तं द्रष्टुमिच्छति,

राजा— महाननुग्रहः (शकुन्तलाया मुखं पश्यति)

शकुन्तला— (समन्दस्मितं) किं हं एव्व अग्गदो गमिस्सं, — छाया (किमहमेवाग्रतो गमिष्यामि)

राजा— (सस्मितं) महान्प्रमोदः (शकुन्तलां पुरस्कृत्य सर्वैस्सह परिक्रम्य नेपथ्याभिमुखमवलोक्य)

रवितेजोऽभिभूताय हविषा जातवेदसे ।
ददान इव तेज स्स्वं भाति वेद्यां तपोधनः ॥ १३ ।

(स्तोकमन्तरं गत्वा) धन्यः खल्वहं —

तेजःपुञ्जो मूर्तिमान्स्वाश्रितानां
मोहध्वान्तध्वंसनायावतीर्णः ।
साक्षाच्छ्रीमान्कर्मसाक्षीव कण्वः
शान्तात्मा मां दूरतो वीक्षते यत् ॥ १४ ॥

( ततः प्रविशति यथा निर्दिष्टः कण्वः )

कण्वः—(दूरादेवविलोक्य) राजायं धर्मवृत्या तावदस्मानप्यतिक्रामति, —

भोगास्पदे स्थितो राज्ये चातुर्वर्ण्यावने रतः ।
नित्यं स्वसुखनिस्तर्षः साक्षाद्राजर्षिरेव हि ॥ १५ ॥

राजा— (स्वगतं)

ईदृशं तपसां राशिं शान्त्यादिगुणसागरम् ।
अदृष्ट्वैव मुनिं पूर्वं दस्युवन्नगरं गतः ॥ १६ ॥

तदिदानीं—

मुनेः परोक्षे दुहितुर्विवाहं
कृतं तु संस्मृत्य मनो मदीयम् ।

५

त्रासत्रपासङ्कुचितं रुणद्धि
मा मेति धैर्यादुपसर्तुमेनम् ॥ १७ ॥

अथवाऽनतिक्रान्तधर्मवृत्ते मम का नाम विचिकित्सा शान्तात्मनि तपोधने (उपसृत्य प्रणमति)

कण्वः— (प्रकाशं) राजन् —

अवाप्तसर्वकामस्य स्वधर्मनिरतस्य ते ।
आशीर्वचस्तु यात्यद्य सिद्धसाधनतां ध्रुवम् ॥ १८ ॥

राजा— (प्रकाशं) अनुग्राह्योऽयं

कण्वः— एवमेव भूयाः,

शकुन्तला— (समन्दाक्षं) सउंदला हं वंदामि (भरतेन सह प्रणमति) — छाया (शकुन्तलाहं वन्दे)

कण्वः— जाते, अनवरतमपि भर्तुरभिमता पुत्रानुवर्त्यमाना च भव, (अवशिष्टं हवनकर्म निर्वर्त्य सर्वैस्साकमग्निं प्रदक्षणीकृत्य)

मन्त्राहुतिविवृद्धात्मा ज्वालामालासमुज्ज्वलः ।
पुनातु पावको युष्मान्सर्वकिल्बिषघस्मरः ॥ १९ ॥

(सर्वैः स्साकमग्निशरणान्निष्क्रम्य निजोटजं प्रविश्योपविश्य च) राजन्, इदमासनं,

राजा— अस्तु नाम (क्षितितल एव शकुन्तलयोपविशति)

कण्वः— राजन् —

अपि नाम तपो विवर्धते ते,
प्रकृतीनां परिपालनात्मकं तत् ।
त्वयि सन्ति किमु प्रजाश्च रक्ताः
निजधर्मैकरता निरन्तरायाः ॥ २० ॥

राजा— (सविनयं) भगवन् के वयमत्र —

तपसां महिमा भवादृशाना
मनुशास्ति स्वयमेव धर्मवृत्तिम् ।
वयमत्र तु राजशब्दभाजः
प्रकृतीनां परिपालने निमित्तम् ॥ २१ ॥

शाङ्र्गरवः— राजन्, निष्प्रत्यूहमस्माकं कर्मैव कथयति ते प्राभवं

( ततः प्रविशति मेनका )

मेनका— दिट्ठिआ पेक्खामि, — छाया (दिष्ट्या पश्यामि)

राजा— किन्नु खलु —

बालातपाहतकनत्कनकप्रभाभिः
वेश्मैतदाशु परिलिप्तमिवावभाति ।
सौदामनी किमु न सा सुचिरद्युति स्स्यात्
कान्तिच्छटाजठरभागिव विस्मितोऽस्मि ॥ २२ ॥

(मेनका— उपसृत्य सबाष्पगद्गदं तिष्ठति)

राजा— (विलोक्य सवैलक्ष्यं) किन्नु खलु, शकुन्तलाद्वयमिवैकदा

शकुन्तला— (ससम्भ्रममुत्थाय) अंब, (इत्यालिङ्गति)

राजा— ( स्वगतं ) कथं मेनका ( निर्वर्ण्य ) सत्यं शकुन्तलाया जननी —

स्वसुताभिमुखी सेयं मेनका नाकभूषणम् ।
विलसत्यद्य दुहितु दर्पणे प्रतिबिम्बवत् ॥ २३ ॥

मेनका— (शकुन्तलाया शिरः परामृशन्ती सबाष्पगद्गदं) दिट्ठिआ वळळहेण संगदं तुमं पेक्खामि, — छाया (दिष्ट्या वल्लभेन सङ्गतां त्वां पश्यामि)

राजा— (उत्थाय सविनयं) परोक्षचक्षुषां न किमपि निवेदनीय-मस्ति, अनपराधी दुष्यन्तः प्रणमति ( इति शकुन्तलया सह प्रणमति )

मेनका— (सापत्रपं) एव्वं एव्व होदु दंपदित्तणं, दिट्ठिआ वअ-णीआदो विमुक्का वच्छा, वअं हिअअसळ्ळादो, — छाया (एव-मेव भवतु दाम्पत्यं, दिष्ट्या वचनीयाद्विमुक्ता वत्सा, वयं हृदयशल्यात् )

शाङ्र्गरवः — राजन् , अपि वर्तते स्मृतिपथे, यदभिहितं " स्त्रीणामशिक्षितपटुत्वं " इत्यादिकं, कथमीदानीं मन्यसे शकुन्तलां,

राजा— तत्र दुर्वाससश्शापोऽपराध्यति

कण्वः— नूनमस्पृष्टदोषगन्धोऽयं राजर्षिः

मेनका— संसअडोळाअमाणमाणसेण एआरिसिं संणिहिदं वि उवक्खिदवंतेण राएसिणा णिअधम्मअत्तणं प्पअडिदं — छाया ( संशयडोलायमानमानसेनैतादृशीं सन्निहितामप्युपेक्षितवता राजर्षिणा निजधार्मिकत्वं प्रकटितं)

राजा— (साञ्जलिबन्धं) दिष्ट्या कृतार्थोऽस्मि,

मेनका— (भरतमादाय) जाद, रूवेण विअ हिअएण वि तादं अणुसर, ( इति कपोलयोश्चुम्बति ) — छाया ( रूपेणेव हृदयेनापि तातमनुसर )

कण्वः— (भरतमादाय) राजन् —

बाल्य एव शिशावस्मिन्राजते सत्वशालिता ।
भवानिव गुणोपेतो भूयादयमपि श्रिया ॥ २४ ॥

राजा— किंवा न भवेद्भगवदनुग्रहभाजनस्य,

कण्वः — आरण्यकानामातिथ्यमङ्गीकृत्य श्वो गन्तुमर्हति राजधानीं महाराजः

राजा— यथादिशति कुलपतिः

विदूषकः— (जनान्तिकं) किण्णु खु, अणुमदं विअ वअस्सेण, — छाया (किन्तु खलु, अनुमतमिव वयस्येन)

राजा—(जनान्तिकं) भवता तापसानामातिथ्यमवश्यमङ्गीकरणीयमिति,

विदूषकः— (सभ्रूभङ्गं) मह उण एत्थ णाणुमदं, (मम पुनरत्रनानुमतं)

कण्वः— किंवहुना —

यया वंशप्रतिष्ठा ते तया प्रोषितया समम् ।
दिष्ट्याद्य सङ्गतं दृष्ट्वा त्वामहं हृष्टमानसः ॥ २५ ॥

राजा— ( साञ्जलिबन्धं ) धन्योस्म्यहमपि प्रसन्नकाश्यपसन्दर्शनेन,

कण्वः— राजर्षे, किं ते भूयः प्रियमुपहरामि,

राजा—

अनन्तपुण्यदृश्यानां दर्शनं भवतामभूत् ।
अहं चानुगृहीतोस्मि किमितोप्यस्ति मे प्रियम् ॥ २६ ॥

तथापीदमस्तु — (भरतवाक्यं)

भूपालाः परिपालयन्तु भुवनं न्याय्येन सम्यक्पथा
स्याद्गोब्राह्मणमण्डलाय कुशलं लोकोस्तु नित्यं सुखी ।
कासारा रसपूरिता विटपिनः पुष्पैः फलैस्सम्भृता —
स्सस्याढ्या धरणिश्च सन्तु समये वर्षन्तु धाराधराः ॥

( निष्क्रान्तास्सर्वे )

॥ इति श्रीबालधन्वि जग्गू वकुलभूषण कविविरचिते
प्रसन्नकाश्यपे तृतीयोऽङ्कः ॥

॥ सम्पूर्णं नाटकं ॥




एम्. वि. प्रणतार्तिहरेण स्वकीय शेषाद्रि मुद्रालये मुद्रापितम्.

॥ श्रीः ॥

# जग्गू वकुळभूषण कविविरचिताः ग्रन्थाः



## गद्यकाव्यं —

१) जयन्तिका (इयं शय्यापाकादि सर्वविषयेष्वपि महाकवि बाणभट्ट कृतकादम्बरीसहोदरी )

२) उपाख्यानरत्नमञ्जूषा ( क्षेमेन्द्रकविकृतचारुचर्या प्रदर्शितोपाख्यान विशदीकरणरूपा)

३) भावकौमुदी (कादम्बरीकल्याणाख्य नाटकस्य व्याख्या)

## पद्यकाव्यं —

४) करुणरसतरङ्गिणी

५) पथिकोक्तिमाला

६) शृङ्गारलीलामृतम्

## चम्पूकाव्यं —

७) यतिराजचम्पूः

८) भारतसङ्ग्रहः

## नाटकानि —

९) अद्भुतांशुकं ( वेणीसंहारस्यपूर्वभागः )

१०) स्यामन्तकं

११) प्रतिज्ञाकौटल्यं ( मुद्राराक्षसस्य पूर्वभागः )

१२) मञ्जुळमञ्जीरं

१३) बलिविजयः ( व्यङ्कं )

१४) असूल्यमाल्यं ( व्यङ्कं )

१५) अप्रतिमप्रतिमं ( व्यङ्कं )

स्तोत्राणि —





## शुद्धाशुद्ध पत्रिका

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| २ | १५ | लिं | किं |
| ३ | २ | परिहृता | परिहृता |
| ४ | १४ | गृहराम | गृहाराम |
| ७ | १४ | स्निन्ध | स्निग्ध |
| ८ | २० | सु | सु |
| १५ | १ | अद्वितीय | अथद्वितीय |
| १८ | ४ | तम्ब | अम्ब |
| १९ | १५ | भअदो | भअवदो |

